सर्पसंस्कारः शौनकादौ ज्ञेयः । प्रायश्चित्तानिच्छोः पतितस्य जीवतोऽपि घटस्फोटे कृते एकाहमाशौचम् । एकादशाहश्राद्धान्तानि प्रेतकार्याणि दाहवर्जं कुर्यात् । उदकदानं च । एतत्सर्वं तूष्णीम्, घटनिनयने नामग्रहणविधानादिति वृद्धाः । पिण्डोदकश्राद्धानि नाम्ना दद्यादित्यपरार्कः । पतितस्य ज्ञातीनां घटस्फोटात्प्राक् धर्माधिकारो नास्तीत्यपि सः । घटस्फोटविधिस्त्वन्यत्र ज्ञेयः । कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्रहविधिर्मिताक्षरादौ ज्ञेयः । तेषां जातकर्मादयः संस्काराः कार्या इत्यपरार्कः । केचित्त्वकृतघटस्फोटस्यापि प्रायश्चित्तकरणानन्तरं संग्रहविधिः पुनःसंस्काराश्च कार्या इत्याहुः । नीचाभिगामिन्यादिस्त्रीणां तु संग्रहेऽपि वासो गृहान्तिके पर्णकुट्यादौ देयः । अन्नाच्छादनं प्राणधारणपर्याप्तं देयं पुरुषान्तरेभ्यो रक्षणं च कार्यमित्याद्यनुक्तं मिताक्षरादौ ज्ञेयम् ।

**अथ दशाहमध्ये दर्शपाते निर्णयः ।** प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते । समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत् । ऋष्यशृङ्गः—आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् । समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः । मातापित्रोस्तु श्लोकगौतमः—अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् । पित्रोस्तु यावदाशौचं दद्यात्पिण्डाक्षताञ्जलीन् । इदं त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपि तन्त्रं समाप्यमेव । पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् । तावदेवोत्तरं तन्त्रं पर्यवस्येत्त्र्यहात्परमिति गालवोक्तेः । अन्येषां त्र्यहमध्येपि समाप्तिरिति निर्णयामृतमाधवयोः । मदनपारिजातमदनरत्नयोस्तु गालवीयमापदनौरसपुत्रादिविषयम् । त्र्यहोर्ध्वमपि न तन्त्रसमाप्तिः पित्रोरित्युक्तम् । अत्र देशाचाराद्व्यवस्थेति निर्णयसिन्धौ ।

कृत्स्नक्ष्मातलवर्तिपण्डितजनालंकारचूडामणि-
गोदातीरजनिर्गुणोच्चयखनिर्नाम्नापदेवोऽजनि ।
तत्सूनोरिह जीवदेवकृतिनः सद्धर्मशास्त्रे कृता-
वाशौचस्य विनिर्णयोऽयमभवच्छ्रीकृष्णसंतुष्टये ॥१॥

इति श्रीमत्सकलभूमण्डलमण्डनायमानश्रीमद्विद्वद्वर्यापदेवसुतानन्तदेवकृतस्मृतिकौस्तुभे जीवदेवकृताशौचदीधितिः समाप्ता ॥

# काशीस्थपुस्तकशुद्धपाठान्तराणि ।

| | पत्रं | पंक्तिः |
|---|---|---|
| सप्तम श्लोकेऽर्धश्लोकोऽधिकः सर्वावनिस्थविदुषामवनं प्रकुर्वन्योऽस्मिन्कलावपि ररक्ष समस्तशास्त्रम् ... | २ | २ |
| स्कन्दगण्डं जहार ... | २ | ५ |
| न्यायकार्ये समर्थैः हीयतेऽतो स एकः | २ | १८ |
| बैश्वानर्या विनिर्णयः ... | ३ | २९ |
| यन्निषिद्धं ... ... | ४ | १६ |
| निषिद्धस्य प्रवृत्तत्वेन ... | ४ | १८ |
| संभवे क्रत्वनुष्ठानमिति ... | ४ | २१ |
| अधिकतदेकदेश ... ... | ४ | २२ |
| समयव्यापित्वं ... ... | ५ | ५ |
| निगमवचनात् ... ... | ५ | २६ |
| तस्या वेधकतिथेः ... | ५ | ३० |
| वेधे तिथिविशेषे ... ... | ६ | ५ |
| दूषकताविधौ ... ... | ६ | १० |
| मपि कर्तव्यमिति ... ... | ६ | १५ |
| भानौ पित्र्यं ... ... | ६ | २९ |
| औदयिक्यास्तिथेर्ग्राह्यत्वे | ७ | १५ |
| पवादो ज्ञाप्यते ... ... | ७ | २२ |
| पक्कादिं प्रति ... ... | ८ | ३० |
| तदीयलोके ... ... | ९ | ६ |
| माश्वलादिमानेन ... ... | ९ | ३० |
| नक्षत्रदर्शनान्नक्तं ... ... | १० | १७ |
| परत्रैव नक्तं ... ... | ११ | ४ |
| समाहारस्य लाघवं ... | ११ | ६ |
| येतानि कर्माणि ... ... | ११ | १० |
| प्रवदितोर्निर्वपेत् ... ... | १३ | ४ |
| चैतद्वृत्त्यभिप्रायं ... ... | १३ | ९ |
| स्त्रियमिति ... ... | १६ | ६ |
| गावोऽथ दक्षिणा ... | १६ | १० |
| शास्त्रेणैव व्रत ... ... | १६ | ३० |
| प्रतिपदादिकर्तव्योपवासः | १७ | १२ |
| पित्र्येपि कर्मणि ... ... | १७ | २७ |
| स्वीकर्तव्यमिति ... ... | १८ | २ |
| तृतीयायास्त्रिमुहूर्ते ... | १९ | ९ |
| गौरीव्रतेषु ... ... | १९ | ११ |
| शुक्लतिलैः स्नात्वा ... | २० | १ |
| तद्योगस्य गौरीव्रते ... | २० | १३ |
| पवासः कारणीयः ... | २१ | १८ |
| लक्षणमाश्रित्य ... ... | २३ | २८ |
| प्रतिप्रसवत्वोपपत्तौ ... | २४ | १३ |
| पेक्षितविधायित्वेन ... | २४ | २१ |
| तादृशनिष्ठानाम् ... ... | २४ | २२ |
| मेव व्रताधिकारोस्ति ... | २५ | २० |
| ग्रहणस्याविवक्षित ... | २५ | २५ |
| निषेधस्यापवादभूतं शयनीवाक्यं स्वीकृत्य तदपवादत्वेन पुत्र ... ... | २५ | २९ |
| वाप्राप्तविधानं ... ... | २६ | १० |
| न्दवचनाच्च । पितृमातृस्वसृभ्रातृगुर्वर्थे च विशेषतः। उपवासं प्रकुर्वाणः पुण्यं क्रतुशतं भवेत् । नारी च | २६-२५ | |
| कृते ते तु फलं ... ... | २६ | २९ |
| पंचदशधाविभक्त... ... | २७ | १८ |
| द्वादशिका । शुद्धानधिका ... | २८ | १७ |
| समन्यूनाधिकोत्तरा ... | २९ | ३१ |
| विष्णौ द्वादशी ... ... | ३० | १ |
| एकाऽलिप्ताप्यसंयुक्ता ... | ३० | ५ |
| निर्गतायां त्रयोदश्यां ... | ३० | २१ |
| एकादश्याधिक्यं ... ... | ३१ | ५ |
| म्बुपानतैलव्यायाम ... | ३२ | १४ |
| जलपात्रं गृहीत्वा ... ... | ३३ | १ |
| दशम्याः सङ्गदोषेण ... | ३३ | १६ |